नवरत्नमाला अथवा श्यामलानवरत्नमालिकास्तोत्रम् कालिदासविरचितम्

ओङ्कारपञ्जरशुकीमुपनिषदुद्यानकेलिकलकण्ठीम् ।
आगमविपिनमयूरीमार्यामन्तर्विभावये गौरीम् ॥ १॥

दयमानदीर्घनयनां देशिकरूपेणदर्शिताभ्युदयाम् । var देशक
वामकुचनिहितवीणां वरदां सङ्गीतमातृकां वन्दे ॥ २॥

श्यामलिमसौकुमार्यां सौन्दर्यानन्दसम्पदुन्मेषाम् ।
तरुणिमकरुणापूरां मदजलकल्लोललोचनां वन्दे ॥ ३॥

नखमुखमुखरितवीणानादरसास्वादनवनवोल्लासम् ।
मुखमम्ब मोदयतु मां मुक्तताटङ्कमुग्धहसितं ते ॥ ४॥

सरिगमपधनिरतां तां वीणासङ्क्रान्तकान्तहस्तां ताम् ।
शान्तां मृदुलस्वान्तां कुचभरतान्तां नमामि शिवकान्ताम् ॥ ५॥

अवटुतटघटितचूलीताडिततालीपलाशताटङ्काम् ।
वीणावादनवेलाऽकम्पितशिरसां नमामि मातङ्गीम् ॥ ६॥

वीणारवानुषङ्गं विकचमुखाम्भोजमाधुरीभृङ्गम् ।
करुणापूरतरङ्गं कलये मातङ्गकन्यकापाङ्गम् ॥ ७॥

मणिभङ्गमेचकाङ्गीं मातङ्गीं नौमि सिद्धमातङ्गीम् ।
यौवनवनसारङ्गीं सङ्गीताम्भोरुहानुभवभृङ्गीम् ॥ ८॥

मेचकमासेचनकं मिथ्यादृष्टान्तमध्यभागं ते ।
मातस्वरूपमनिशं मङ्गलसङ्गीतसौरभं वन्दे ॥ ९॥ var मातस्तव स्वरूपं
नवरत्नमाल्यमेतद् रचितं मातङ्गकन्यकाभरणम् ।
यः पठति भक्तियुक्तः सः भवेत् वागीश्वरः साक्षात् ॥

इति कविकालिदासविरचितं नवरत्नमाला अथवा
श्यामलानवरत्नमालिकास्तोत्रम् सम्पूर्णम् ।